# संस्कृत-वार्ता:

**दिनाङ्क:** 21-12-**2020**

**प्रात:** - 06: 55

**<u>मुख्य-वार्ता:</u>**

- प्रधानमन्त्रिणा नरेन्द्रमोदिना दृश्य-श्रव्य-अन्तर्जालीय-माध्यमेन वियतनामदेशीयेन समकक्षीयेन गुयेन-जुआन-फुक वर्येण साकं शिखर-सम्मेलनं समनुष्ठास्यते।
- प्रधानमंत्री नरेन्द्रमोदी ह्य: प्रात: सिख-मतावलम्बिनां रकाबगञ्ज इत्याख्यम् ईशोपासनागृहं सम्प्राप्य गुरवे तेग बहादुर-वर्याय श्रद्धाञ्जलिं समार्पयत्।
- कोविड-19 इति वैश्विक संक्रमणदृशा भारतं सुदृढां स्थितिं भजते। भारते अनारतं प्रत्यावाप्तिमितौ परिष्कार: समभिवर्ध्य प्रतिशतं पञ्च एकं दशमलवोत्तर पञ्चनवतिमित: जाजायत।
- प्रधानमन्त्री नरेन्द्र मोदी श्व: अलीगढ़ मुस्लिम विश्वविद्यालयस्य  शताब्दोत्सव समारोहं दृश्यश्रव्य प्रणालिकया सम्बोधयिष्यति।
- सर्वकारेण  कृषि-अधिनियमं विरुध्य विरोधकर्तार: कृषका: अग्रिमचरणस्य वार्तायै तिथिसुनिश्चयीकर्तुं सम्प्रार्थिता:।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु

- **मुखावरंक सन्धारयन्तु –**
- **सामाजिकदौर्यं परिपालयन्तु,**
- **पाणिपादं च यथासमयं प्रक्षालयन्तु। वार्ता: विस्तरश:**

## पीएम वियतनाम

प्रधानमन्त्रिणा नरेन्द्रमोदिना दृश्य-श्रव्य-अन्तर्जालीय-माध्यमेन वियतनामदेशीयेन समकक्षीयेन गुयेन-जुआन-फुक वर्येण साकं शिखर-सम्मेलनं समनुष्ठास्यते। सम्मेलनवसरे उभाभ्यां नेतृभ्यां द्विपक्षीय-क्षेत्रीय वैश्विक विषयेषु च स्वीय विचारा: प्रकटयिष्यन्ते। एवञ्च भारत-वियतनामदेशयो: भावि रणनीतिक सहभागिता-विकासाय मार्गदर्शनं प्रदास्यत:।

## प्रधानमंत्री रकाबगञ्ज

प्रधानमंत्री नरेन्द्रमोदी ह्य: प्रात: सिख-मतावलम्बिनां रकाबगञ्ज इत्याख्यम् ईशोपासनागृहं सम्प्राप्य गुरवे तेग बहादुर-वर्याय श्रद्धाञ्जलिं समार्पयत्। गुरु: तेग- बहादुरवर्य: महत्कार्याय सर्वोच्चबलिदानाय अभिज्ञायते। प्रधानमन्त्री श्रीनरेन्द्रमोदी ट्वीट इति सामाजिकालेखे समसूचयत् यत् असौ अद्यप्रात: ऐतिहासिके रकाबगञ्ज-साहिब इत्याख्ये स्थले प्रार्थना: अकरोत् यत्र गुरुतेग-बहादुरवर्यस्य अन्तिम-संस्कारो विहित: आसीत्। प्रधानमन्त्रिणा साष्टांगप्रणाम: उपस्थापित: एवञ्च श्रीमोदिनं समेत्य लक्षश: जना: गुरो: तेग-बहादुर शिक्षाया: प्रेरणाम् अप्राप्नुवन्। प्रधानमन्त्री श्रीमोदी हर्षं प्राकटयन् प्रावोचत् अयं हि गुरो: आशीर्वादरूपं यत् गुरो: चतुश्शतं प्रकाशपर्वण: विशेषावसर: राष्ट्रिय-जनतान्त्रिकसंयुति प्रशासनकाले समायोक्ष्यते। अवसरेऽस्मिन् प्रधानमन्त्रिणा गुरो तेगबहादुरस्य प्रकाश पर्व इदम् ऐतिहासिकरुपेण आमानयितुं जीवने तदीया: शिक्षा: स्वीकर्तुं जना: प्रार्थिता:। प्रधानमन्त्रिणो न कापि पूर्वयोजनया सुरक्षाचकात् ऋते गुरुद्वारा इति ईशोपासनागृहं गमनेन न खलु जना: कीदृशीमपि असुविधां अनुभूतवन्त:। अवधेयास्पदं तथ्यमिदं यत् ह्य: हुतिंगतदिवसावसरे प्रधानमन्त्रिणा गुरवे तेग-बहादुरवर्याय श्रद्धासुमनांसि अर्पितानि आसन् अपि च न्यायपूर्ण-समावेशीसमाजाय तदीय: साहसिक –दृष्टकोण: स्मारित: आसीत्। ध्यानास्पदं तथ्यमिदं यत् गुरु: तेग बहादुर: एकविंशत्यधिक षोडश-शततमाब्दे वर्षे जनि लेभे अपि च अस्यैव शताब्दस्य पञ्चसप्ततितमे वर्षे जनकल्याणाय स्वीय सर्वोच्च बलिदानं प्राददात्।

## अमित शाह विजिट

द्विदिवसव्यापिन्यां स्वीय-पश्चिमबंगालयात्रायां केन्द्रीयो गृहमन्त्री श्री अमितशाह: गुरवे रवीन्द्रनाथ-ठाकुर-वर्याय श्रद्धाञ्जलिं अभ्यर्पयत्। अनन्तरं असौ विश्वभारती-विश्वविद्यालयस्य संगीत- भवने तदीय गीताधारितं नृत्यं अपश्यत्। श्रीअमितशाह अब्रवीत् यत् महात्मगाधी: सुभाषचन्द्रबोसश्च गुरो: रवीन्द्रनाथ-टैगोर-वर्यात् प्रेरणां प्राप्तवन्तौ। ध्यातव्यमस्ति यत् अद्य गृहमन्त्रिणोऽमितशाहश्च द्विदिवसीय यात्राया: अद्य द्वितीयम् अन्तिमं च दिवसो अवर्तत। असौ विश्वभारत्या: केन्द्रीयकार्यालयस्य पुरत: विवेकानन्द-सरानी-इत्याख्यं मार्गं समुद्घाटयत्।

**कोविड**

कोविड-19 इति वैश्विक संक्रमणदृशा भारतं सुदृढां स्थितिं भजते। भारते अनारतं प्रत्यावाप्तिमितौ परिष्कार: समभिवर्ध्य प्रतिशतं पञ्च एकं दशमलवोत्तर पञ्चनवतिमित: जाजायत। विगते अहोरात्रे नवविंशति सहस्राधिक जना: स्वस्थीभूता:। स्वास्थ्यमन्त्रालयानुसारं आहत्य अशीति सहस्राधिक पञ्चनवति लक्षं जना: स्वस्थीभूता:। वर्तमानसमये देशे संक्रमितजनानां संख्या पञ्च सहस्राधिक त्रिलक्षं वर्तते। मन्त्रालयेणोक्तं यत् त्रयस्त्रिंशत-राज्येषु केन्द्रशासित प्रदेशेषु च कोविड नाइन्टीन इत्यस्मात् संक्रमणात् संक्रमित जनानां संख्या प्राय: विंशति सहस्रं यावत् वर्तते। गत चतुर्विंशति होरासु चतुर्विंशत्यधिक-षड्शताधिक षड्विंशति सहस्रं नूतनप्रकरणानि पञ्जीकृतानि। देशे आहत्य एकत्रिंशत् सहस्राधिक एक कोटि प्रकरणानि पञ्जीकृतानि।

**यूपी-मुख्यमन्त्री**

उत्तरप्रदेशस्य मुख्यमन्त्रिणा योगी-आदित्यनाथेन प्रोक्तं यत् विपक्षिदलानि देशस्य उन्नतिं न वांछन्ति। विपक्षिदलानि कृषकान् कृषि अधिनियमान् प्रति भ्रमितान् कुर्वन्ति। श्री योगी अवादीत् यत् केन्द्रसर्वकार: राज्यसर्वकारै: सार्धं कृषकाणां हिताय कार्यं करोति।

**प्रधानमन्त्रि-एएमयू**

प्रधानमन्त्री नरेन्द्र मोदी अलीगढ़ मुस्लिम विश्वविद्यालयस्य शताब्दोत्सव समारोहं दृश्यश्रव्य प्रणालिकया सम्बोधयिष्यति। विश्वविद्यालयस्य कुलपति- श्रीमुफैदिल सैफुदीन: केन्द्रीय शिक्षामन्त्री रमेशपोखरियाल: च अस्मिन् सहभागितां विधास्यत:।

**सर्वकार कृषका:**

सर्वकारेण कृषि-अधिनियमं विरुध्य विरोधकर्तार: कृषका: अग्रिमचरणस्य वार्तायै तिथिसुनिश्चयीकर्तुं सम्प्रार्थिता:। एकस्मिन् लिखितपत्रे कृषकसमूहा: प्रकरणंसन्दर्भे वार्ता: कर्तुं कथिता: सन्ति। ध्येयमस्ति यत् कृषकसर्वकारयो: मध्ये वार्ताया: षष्ठं चरणं कृषकै: नांगीकृतम् आसीत्।

**।। इति वार्ताः ।।**